

# अष्टादशपुराणपरिचयः



अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥



—श्रीकृष्णमणित्रिपाठी

प्रकाशक
भारतीय-साहित्य विद्यालय
१४।२६ टेढ़ीनीम
वाराणसी।

मुद्रक
स्वामी द्वारिकादास शास्त्री
संकठा प्रेस, सोरा कुआँ,
वाराणसी।



रामचन्द्राभ्रयुग्माब्दे विजयादशमीतिथौ।
अष्टादशपुराणानां परिचयोऽगात्पूर्णताम्॥
त्रिपाठ्युपाह्वश्रीकृष्णमणिशास्त्रिकृतो मुदा।
तेन तुष्यतु विश्वात्मा पुराणपुरुषः प्रभुः॥

अष्टादशपुराणपरिचयः



पुराणसांख्यसाहित्यव्याकरणाचार्य एम्. ए.-
साहित्यरत्नश्रीकृष्णमणिग्रन्थस्य लेखकः ।



विबुधकुलेन्दुर्वाग्मी सच्चित्रमणिः शोभनः शुभारम्भः ।
कमलापतिस्त्रिपाठी नीतिविदामग्रणी र्जयति ॥

# समर्पणम्

विविधविद्याविद्योतितान्तःकरणानां नयविनयसौजन्यादिगुणगणालङ्कृतानां
भारतगौरवानुकूलशासनकलाकुशलानामम, अनेकग्रन्थप्रणयनपटूनां देश-
सेवकरत्नमालामणीनां बुधजनानन्दसन्दोहदायिनां सुरभारती-
समुन्नयनबद्धपरिकराणां सहृदयहृदयानां स्वनामधन्यानां
श्रीमतामुत्तर प्रदेशीय गृह-शिक्षा-सूचना-सचिवानां
**पं० कमलापतित्रिपाठिमहोदयानां** करकमलयो-
रयमष्टादशपुराणपरिचयाभिधो ग्रन्थः
सादरं सबहुमानञ्च समर्प्यते ।



**आनन्दकाननोद्भूत ! शिक्षासचिवपुङ्गव !**
**त्रिपाठ्युपाह्वकमलापतिशास्त्रिन् ! सुधीवर !**
**पौराणिकरहस्यानां गवेषणकृते कृतम् ।**
**ग्रन्थं गृहाण** श्रीकृष्णमणिना श्रद्धयार्पितम् ।



# प्रस्तावना

भारतीयसंस्कृतिर्वेदस्मृतिपुराणानामाश्रयेणाद्य यावत्प्रचलति। अनेकशाखाभिन्नेषु चतुर्षु वेदेषु, मन्वादिबहुसङ्ख्याकासु स्मृतिषु, ब्राह्माद्यष्टादशभेदभिन्नेषु पुराणेषु तस्याः संस्कृतेःस्वरूपं सर्वश्रेष्ठमेकरूपमेवोपलभ्यते। यद्यपि बहुषु कृतादियुगपरम्परासु व्यतीतासु भारतीयाचारविचाराणां नैकविधत्वमिवाभाति, तथापि न तत्तादृशं यत्सर्वथा वेदादिप्रोक्ताचारविचारान् विसंवदेत्। वेदेषु यद्भारतीयाचाराविचाराणां स्वरूपं संक्षेपतः उपलभ्यते, तत्स्मृतिषु विस्तृतं पुराणेषु च ततोऽपि कथेतिहासद्वाराऽतिविस्तृतमुपलभ्यते। परन्तु सर्वत्र पुष्पमालायां सूत्रमिव वैदिकं मूलस्रोतःस्वरूपं सर्वत्रानुस्यूतमेव। अद्य यावद् भारतीया यत्र कुत्रापि भारते ततोऽपि सुदूरमफ्रिकादिदेशेषु गता अपि धार्मिकं कार्यमुपतिष्ठन्तः सर्वत्रादौ श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थमित्यादि संकल्पयन्त्येव। पुराणैरेव भारतीयानां सर्वदेशीयजनेभ्यो विशिष्टं भिन्नत्वं धार्मिकत्वमीश्वर-दैव-वेद-पुनर्जन्मप्रभृतिषु दृढश्रद्धत्व, कृपाऽहिंसादिस्वभावत्वं सुरक्षितं विद्यते। यान्याधुनिकानां नूतनानीव विज्ञानानि, तानि क्वचित्संक्षेपतः, क्वचिच्च विस्तरतः पुराणेषूपलभ्यन्ते। प्रत्युताद्यतनीयाधुनिकविज्ञानवेत्तॄणां बुद्धेः सर्वथाऽगोचरविषयः। यथा कया क्रमबद्धपद्धत्या सृष्टेः प्रादुर्भावः? कथं कदा प्राणतत्त्वस्य चैतन्यस्य च पाञ्चभौतिकं शरीरं धृत्वा जगति सञ्चारः? इन्द्रियाणां मनसो बुद्धेश्चैकदा क्रमेण वासमुत्पत्तिः? इन्द्रियमनोबुद्ध्यादितत्वानि कैर्द्रव्यविशेषैर्मिलितानि? मरणानन्तरमुत्पत्तेः पूर्वं वा जीवस्य कीदृशी स्थितिःकुत्र वा वासः? इत्यादयो बहवो विषयाः पुराणेषु क्रमेणोपबद्धा उपलभ्यन्ते। तत्र प्रथमतः 'एकदेशिकशरीरी जीव उत्पद्यते, इति सिद्धान्त आधुनिकवैज्ञानिकानाम्, भारतीयप्राचीनपौराणिकवैज्ञानिका अपि स्वपद्धत्या क्रमबद्धरूपेण जीवस्य शरीरधारणप्रकार-

मिन्द्रियाणां क्रमशः समुत्पत्तिं तद्भेदात्प्राणिपूच्चावचभेदांश्चोपवर्णयन्ति यथा श्रीमद्भागवते-( २-१० )

वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा ।
अन्तःशरीर आकाशात्पुरुषस्य विचेष्टतः ।
ओजः सहो बलं जज्ञे ततः प्राणो महानसुः ॥
प्राणेन क्षिपता क्षुत्तृडन्तरा जायते प्रभोः ।
पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ।
मुखतस्तत्त्वनिर्भिन्नं जिह्वा तत्रोपजायते ।
विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः ॥
जले वै तस्य सुचिरं निरोधःसमजायत ।
नासिके निरभिद्येतां दोधूयति नभस्वति ॥
यदात्मनि निरालोकमात्मानं च दिदृक्षतः ।
निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥ (श्लो० १३-२१)

अनेन महता प्रघट्टकेन प्राणतत्वे शरीरस्थे जाते तत्तदपेक्षयेन्द्रियाणां क्रमशश्चोत्पत्तिर्जायते इति ज्ञायते ! यद्यप्याधुनिकाः पाश्चात्याः, भारतीया अपि केचन क्रममिमं न विश्वसन्ति, पौराणिकान सर्वानपि बुद्धेरगोचरान् विषयान् काल्पनिकानिति मत्वोपहसन्ति तथापि तत्तेषां कथनं सुविचारकेभ्यो न सर्वथा रोचते। तेऽत्र विषयेऽभिप्रयन्ति-यस्य तत्वस्य ज्ञानार्थं यादृश उपायोऽपेक्ष्यते तादृशेनैवोपायेन तस्य तत्वस्य ज्ञानं भवतीति पौराणिकस्य बुद्धेरगोचरस्य तत्त्वजातस्य साक्षाद् ज्ञानार्थं निर्मला तपसा दोषरहिता सात्त्विकी बुद्धिरपेक्ष्यत इति नैकवारं तत्र तत्र पुराणादिषु वर्णितमतस्तत्तत्वज्ञानार्थं तादृशस्यैव वर्णितस्योपायस्य स्वीकार अपेक्ष्यते। तादृशानि सकलज्ञानसंग्राहकाणि पुराणान्यतिप्राचीनानि, प्रत्युत वेदवत्परम्परया प्राप्तानीति वेदेष्वपि क्वचित्पुराणशब्दस्य प्रचलितार्थस्योपलब्ध्या वक्तुं शक्यते। अतएव पुराणकथास्थव्यक्तिविशेषाणां पुरुरवोर्वशीयमयमीप्रभृतीनामुल्लेखः ऋग्वेदेऽप्युपलभ्यते। वेदानां समीचीनार्थक-

रणं पुराणं विनाऽशक्यप्रायमेव, प्रत्युत वैदिकार्थस्य हानिकरणमेव । अतः सम्यगुक्तमभियुक्तैः-

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति ॥

पुराणानामाश्रयेणैव मनुष्यजीवनस्य प्राथमिक्यवस्था, उन्नतिप्रकारे विद्यमाना विशिष्टाः प्रकाराः, भिन्न-भिन्नजातीनां परस्परमेलनपृथग्भावः नीतितत्वानां, धर्मतत्वानां भिन्नभिन्नदेवोपासनातत्वानां निरूपणम्, जीवस्येतिकर्तव्यता, समाजस्य क्रमविकासः, परमेश्वरस्य सर्वत्रैकरूपेण स्थितिः सुखस्य मूलं साधनमित्यादयो बहवो विषयाः पुराणद्वारैव मनुजाः सरलतया सुखेन च ज्ञातुं शक्नुवन्ति । प्रत्युत पुराणैरस्पृष्टं किमपि तत्वं विचारजातं च नास्तीति कथने नात्युक्तिदोषस्पर्शनभीतिः ।

तानि पुराणानि भगवता वेदव्यासेन शुकाय पुत्राय रोमहर्षणशिष्याय चोपदिष्टानि ।अयं रोमहर्षणश्च महान पुराणवक्तासीदिति वायुपुराणोक्त-तन्नामनिर्वचनतो ज्ञातुं शक्यम् ।

लोमानि हर्षयाञ्चक्रे श्रोतॄणां यत्सुभाषितैः ।
कर्मणा प्रथितस्तेन लोकेऽस्मिल्लोमहर्षणः ॥ १।१।१३ ॥

रोमहर्षणेन तस्य सुमतिप्रभृतिभिः षट्शिष्यैश्च पुराणसंहिताद्वारा सर्वत्र भारतीयसंस्कृतेः पुराणज्ञानस्य च प्रचारः कृतः । यथा—

प्राप्य व्यासात्पुराणादि सूतो वै रोमहर्षणः ।
सुमतिश्चाग्निवर्चाश्च मित्रयुः शांशपायनः ॥
कृतव्रतोऽथ सावर्णिः षट् शिष्यास्तस्य चाभवन् ।
शांशपायनादयश्चक्रुः पुराणानां तु संहिताः ॥ ( अग्नि २७१,१०१२)

रोमहर्षणेन तस्य पुत्रेणोग्रश्रवसा च नैमिषारण्ये शौनकादिभिर्यज्ञ-कर्मणि प्रवृत्तैः प्रवर्तितेन प्रायः सर्वाणि पुराणानि प्रोक्तानि । यथा— शौनकस्य सिद्धाश्रमेऽग्निष्टोमयज्ञे षष्टिसहस्रऋषिमध्ये सनत्कुमाराय नारदेनोक्तं नारदपुराणमनेनोक्तम् ( ना० १, १-२ ) कुरुक्षेत्रे दृषद्वतीतीरे

दीर्घसत्रे वायुपुराणं ब्रह्माण्डञ्च कथितम् ( वायु० १।१।११-१२ ब्रह्म पु० १, १, १७ ) द्वादशवार्षिकसत्रे ब्रह्मपुराणं प्रोक्तमित्यादिवर्णनं तत्र पुराणप्रारम्भ उपलभ्यते। अनेनपुराणप्रचारसमुद्योगो ज्ञायते। एतादृशः सर्वोपकारकपुराणजातस्य सर्वेषां सारल्येन सुखेन च ज्ञानं भवत्वितीच्छयाऽऽङ्ग्लभाषया पार्जिटर-बेसेण्ट-स्मिथ-प्रभृतिभिः, महाराष्ट्रभाषया श्रीपं० काले, श्री पं० चित्रावप्रभृतिभिः, हिन्दीभाषायां पं० श्री ज्वालाप्रसादमिश्रैः, एवं वंगभाषायां जीवनीचरित्रकारैः, तामिलप्रभृतिभिर्भाषाभिश्च निबन्धकारैश्च क्वचित्संक्षेपेण क्वचिच्च विस्तरेण पुराणवाङ्मये व्यलेखि; परन्तु संस्कृतभाषया सर्वपुराणानां संक्षेपेण स्वरूपबोधकः तत्रत्यविषयविशेषस्य यथा भक्तेः, पुराणलक्षणजातस्य, पुराणानां महत्त्वस्य, पुराणस्थविज्ञानस्य, पुराणभाषाविमर्शस्य, सृष्टिरहस्यस्य, अवतारतत्वस्य, भुवनकोशादिविषयजातस्य, सर्वपुराणानां संक्षिप्तविषयस्य च बोधकः कश्चनाल्पकायो ग्रन्थोऽपेक्षित आसीदेव। तस्या अपेक्षायाः पूर्तिः श्री पण्डितवरव्याकरण-साहित्याद्याचार्यैः श्रीकृष्णमणित्रिपाठिभिर्महता प्रयत्नेन परिश्रमेण च कृतेत्यवश्यं ते जनताया अनेकधन्यवादार्हाः। अनयैव रीत्या तैरग्रेऽपि पुराणस्थ भूगोलखगोलभागस्य समाजस्योन्नतिप्रकारस्य पुराणस्थविशिष्टविषयजातस्य च वर्णनं संक्षेपेण यदि क्रियेत, तर्हि मन्ये जनताजनार्दनस्य सेवया साकं कीर्त्यादिप्राप्तिश्च तेषां स्यादिति। एतद्ग्रन्थरत्नं दृष्ट्वा पण्डितश्रीकृष्णमणित्रिपाठिमहोदस्य परिश्रमं जनताऽवश्यं सफलयिष्यतीतिनिश्चयेन वक्तुं शक्यते। अन्ते च ग्रन्थकर्तृभ्यः पण्डित श्रीकृष्णमणित्रिपाठिभ्योऽनेकधन्यवादान् वितीर्य तेषां समुन्नतिं श्रीकाशीपुरीपालकचरणयोः समीपे कामयते।

**श्री पं० अनन्तशास्त्री फडके**

व्या० आ०, मी० ती०, वेदान्तकेसरी च

प्राध्यापकः—काशिक राजकीयसंस्कृतमहाविद्यालयस्य

संस्कृतविश्वपरिषदश्च

❀ श्रीमते रामानुजाय नमः ❀

काशीस्थ श्रीमज्जगद्गुरुभगवद्रामानुजाचार्यपीठाधिपतीनां
वैष्णवाग्रगण्यानां श्रीदेवनायकाचार्यस्वामिमहाराजानां

# शुभाशीर्वादाः

अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान् गुरून्,
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं यामुनम् ।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणम्,
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥

"अष्टादशपुराणपरिचयः" नामान्वर्थाभिधः प्रबन्धोऽवधारितः । मङ्गलाचरणपूर्वकं १ पुराणानां वेदमूलकत्वम् २ पुराणानां महत्त्वम् ३ पुराणानामध्ययनस्यावश्यकता ४ वेदपुराणयोः पार्थक्यम् ५ पुराणानां विज्ञानोपयोगित्वम् ६ पुराणानां प्राचीनत्वम् ७ अष्टादश पुराणानि ८ उपपुराणानि ९ औपपुराणानि १० पुराणप्रादुर्भावक्रमः ११ विरोध-परिहारः १२ पुराणेषु विष्णोः शरीरावयवत्वकथनम् १३ भाषाविमर्शः १४ अष्टादशपुराणानां नाम संख्या तथा क्रमः । प्रतिपाद्याश्च विषयाः श्रवणादिफलन्ततः ॥ १५ पुराणलक्षणम् १६ सर्गः १७ कालपरिमाण विवरणम् १८ प्रतिसर्गः १९ सृष्टिरहस्यम् २० वंशः २१ मन्वन्तराणि २२ दिव्यवर्षविवरणम् २३ चतुर्दशमनूनां नामानि २४ वंशानुचरितम् २५ प्रलयः २६ वर्णाश्रमव्यवस्थाप्रयोजनम् २७ मुक्तिप्रयोजकानि पुराणानि २८ अवतारतत्त्वमीमांसा २९ भक्तितत्त्वविवेचनम् ३० नवधाभक्तिः ३१ भुवनकोषवर्णनम् ३२ भारतवर्षम् ३३ पौराणिकानां कर्त्तव्यम् इत्येवमादयो विषया अत्र योग्यतया सन्निवेशिताः सन्ति ।

कलेवरेण लघीयानपि निबन्धोऽयं पुराणार्णवावतार इवावभासते । विषयोपपादने कल्पनानामाधारतया बहुधा वचनोपन्यासो निबद्धः पुराणमहोदधाववगाहनकुशलतां विचारप्रामाणिकताञ्चाभिव्यनक्ति ।

अस्तु, सूक्ष्मदर्शिनां बहुत्र बहु विवेचनीयमवशिष्यत एवेत्यविप्रतिपन्नम्। काममास्तां तत्। तत्र न किमपि प्रतिवक्तव्यमस्ति। यत्त्विह पुराणानि "मानवसमाजस्य कृते दिव्यज्ञानरत्नपद्मनिधिरूपाणि, वेदानां निगूढार्थदर्शनायाच्छस्फाटिकादर्शरूपाणि, भक्तिमुक्ताफलकल्पतरूपमानि, भानूपमानानि च, कर्मविज्ञानपदार्थविज्ञानादिव्यावहारिकनिखिलविज्ञानप्रकाशनानि" इति प्रत्यपादि तदस्य सौष्ठवमाधुर्यम्। यदास्वादि मनो नान्यदभिकाङ्क्षते।

देशस्याधुनातने स्वातन्त्र्यसुखमये समये तत्संरक्षणाय सम्वर्द्धनाय चापेक्षितां ज्ञानसामग्रीं प्रपूरयितुं क्षमाणि पुराणानीति प्रमीतिरुदेति निबन्धस्यास्याध्ययनेन। तदयं विदुषां विविदिषूणाञ्च समानोपकारकतया सर्वेषामुपादेयतामर्हति। सम्प्रति पुराणानां गुणगौरवाकृष्टहृदयैः सहृदयैर्यत्र तत्र पुराणविद्योद्धाराय प्रयत्यते; तस्मिन्नयं निबन्धः सहायतां व्रजिष्यतीति निर्विवादम्। तस्माद् शोतकपप्रणयिनो विद्यारसिकाः महानुभावा अवधार्येनमनुभूय च सफलयन्तु प्रवधकश्रमम्। तथास्त्विति चानुगृह्णातु सर्वान्तर्यामी पुराणविदेवो भगवान श्रीमन्नारायण इति मङ्गलमभिकामये, सभाजये च एतान्निबन्धकर्तृन् पण्डितश्रीकृष्णमणित्रिपाठि–महाभागानेभिरेव कतिपयैः शब्दैः।

भाग्यादेवानवद्येयं विद्या पौराणिकी सुधा।
स्वाद्यते साधुमतिभिर्वैदिकी रससन्ततिः॥
प्रायोऽपरिचयादेव वञ्चिता ऋजुबुद्धयः।
प्रयतन्ते न सम्प्राप्तुं पुराणनिहितं निधिम्॥ १॥
अष्टादशपुराणानां हेतुः परिचये श्रमः।
श्लाघनीयतमस्तस्मात्स्थाने सुकृतिभिः कृतः॥ २॥

इतिशम्

विजयादशमी
२०१४

श्रीदेवनायक आचार्यः
राजमन्दिरम्,
वाराणसी।

प्राच्यप्रतीच्योभयविद्याविशारदानां विश्वविश्रुतयशसां विपश्चिताम्

# ❀ सम्मतिपत्राणि ❀

## वाराणसेय गवर्नमेण्ट संस्कृतकालेजस्य भूतपूर्वाध्यक्षाः, महामहोपाध्याय पं० श्रीगोपीनाथकविराजमहोदयाः—

भारतीयार्यसंस्कृतेः सम्यक् परिशीलनार्थं यथा वेदानां तन्मूलकस्मृतितंत्राणां च समीक्षणमावश्यकं तथा वेदोपबृंहकाणामितिहासपुराणानां परिज्ञानमपि। तत्र पुराणसाहित्यस्य अतिविपुलतया मन्दमतीनां तत्र प्रवेशाशक्यतया तेषां तदर्थज्ञानसम्पत्त्यै, रुचिहीनानां रुच्युत्पादनाय च पुराणार्थसंग्रहरूपः कश्चित् नवीनो ग्रन्थः अपेक्ष्यते, यत्र पुराणप्रतिपादिताः सर्गप्रतिसर्गादयः तदितरेऽपि तत्र निबद्धा सर्वे विषयाः सरलया गिरा संकलिताः स्युः। अतः अशेषपुराणार्थविवेचनात्मकस्य कस्यचित् महतो ग्रन्थस्य प्रणयने विद्वद्भिः समुद्यमो विधेयः।

पण्डित श्रीकृष्णमणित्रिपाठिना अधुनैवनिर्मितो मत्सविधे प्रेषितश्च "अष्टादशपुराणपरिचय" संज्ञकः एको लघुकायो ग्रन्थो मया दृष्टः। तत्र यद्यपि पुराणार्थसंकलनं सम्यग्रूपेण न संजातं तथापि प्रायः सर्वेषां महापुराणानां विषयसूची सरलश्लोकैरुपनिबद्धा विद्यते, पुराणेषु विभिन्नस्थलेषु समालोचितानां भक्तितत्त्वावतारतत्त्वभुवनकोशादिविषयाणां दिग्दर्शनं च कृतमस्ति। पुराणानां महत्वं तदध्ययनस्य प्रयोजनं वेदपुराणयोः पार्थक्यं पुराणानां विज्ञानोपयोगित्वं च ग्रन्थारम्भे एव संक्षेपेण प्रदर्शितम्। पुराणानां स्वाध्यायं चिकीर्षतां स्वल्पज्ञानवतां विद्यार्थिनां कृते सहायकत्वाद् ग्रन्थकारस्यायमारम्भः शुभाय जातः इति श्लाघनीय एव। छात्रमण्डलेषु विद्वद्गोष्ठीषु च ग्रन्थस्यास्य समुचितः प्रचारो भूयात् इति श्रीविश्व-

नार्थं प्रार्थये । आशासे च ग्रन्थकार इतः परमचिरेणैव अशेषपुराणार्थविवेचनात्मकस्य महत्तरस्य ग्रन्थान्तरस्य निर्माणे दत्तचित्तो भविष्यतीति शम् ।

श्रीगोपीनाथकविराजः

**भूतपूर्व जयपुर संस्कृतकालेजाध्यक्षाः, काशीहिन्दूविश्वविद्यालय-प्राच्यविद्याविभागस्य शिक्षासञ्चालकाश्च**

**महामहोपाध्याय पं० श्री गिरिधरशर्मचतुर्वेदमहोदयाः—**

आचार्यैः श्रीकृष्णमणिशास्त्रिमहाभागैर्निबद्धम् अष्टादशपुराणपरिचयनामकं पुस्तकं मया सम्यगालोचितम् । इह पूर्वं पुराणानां महत्वं तेषामुपयोगश्चेत्यादीन् विषयान् प्रतिपाद्यानन्तरमष्टादशानां पुराणानां नारद-मत्स्य-पुराणाद्युक्तरीत्या विषयसंकलनं प्रदर्शितम् । अनन्तरं च सर्गमन्वन्तरादीनामवताररहस्यादीनां च विवरणमपि कृतम् । हिन्दीभाषायामेतादृशानि पुस्तकानि पूर्वमपि कैश्चिद्धर्मोपदेष्टृमहाभागैर्निर्मितानि, परं संस्कृतभाषायामीदृशस्य पुस्तकस्य प्रथम एवायमवतारः । संस्कृतविद्वांसः प्रायेण हिन्दीभाषामयानि पुस्तकानि नावलोकयन्तीति तेषामप्यनेन पुस्तकेन पुराणपरिचयः सम्पत्स्यत इत्ययं महान् लाभः । अस्य परिश्रमस्य कृते शास्त्रिमहाशयमहमभिनन्दामि । अग्रे च पुराणविषये परिश्रम्य तत्परिभाषाः सम्यगालोच्य तद्रहस्यप्रकटने दर्शनशास्त्रादिभिस्तेषामेकवाक्यतासम्पादनेऽपि च प्रयतेरन् शास्त्रिमहाभागाः इत्याशासे । भुवनकोशादिविवरणे महतः श्रमस्यावश्यकतास्ति । तेन चार्यजातेर्गौरवं लोकानामुपकारश्च परमः संभाव्यते । भवतु नाम । विद्वन्महाभागानां दृष्टिस्तु पुराणविषये पुस्तकमिदं विलिख्य शास्त्रिमहाशयराकृष्टेति महानयमुपकारस्तेषाम् । पुस्तकस्यास्य प्रचुरं प्रचारमहमभिवाञ्छामीति ।

गिरिधरशर्मा चतुर्वेदः

**लखनऊ विश्वविद्यालयस्य कुलपतयो विद्वच्छिरोमणयः,**
**श्री को० अ० सुब्रह्मण्य अय्यर महोदयाः—**

अवलोकितो मया पं० श्रीकृष्णमणित्रिपाठिमहाभागैः लिखितः अष्टादशपुराणपरिचयनामको ग्रन्थः। अतिविपुलकलेवराणां पुराणानां सर्वेषां पठने प्रायः समयो नोपलभ्यते विदुषामपीति स्वल्पेनैव समयेन तत्परिचयदायकस्य अस्य ग्रन्थस्य सर्वे स्वागतं करिष्यन्ति। श्लाघनीयः खलु लेखकप्रयासः। तस्य च सर्वैः सोत्साहपठनरूपमनुरूपं फलं भवत्वित्याशास्यते मया।

को० अ० सु० अय्यरः

**काशिकबिरलासंस्कृतकालेजाध्यक्षाः व्याकरण केशरिणः,**
**पं० श्रीसभापतिशर्मोपाध्याय एम. एल. सी. महोदयाः—**

न तिरोहितमेतन्निखिलशास्त्रपारावारपारदृश्वनां प्रेक्षावताम् कर्मोपासनासंवित्प्लवैः परःसहस्रबाधभयावहवक्रनक्रव्याप्तमनाद्यनन्तानुच्छेद्यदुःखतिमिङ्गिलान्दोलितं प्रपञ्चपाथोनिधिमुच्चिच्छित्सूनां मनीषिप्रकाण्डानां यत्साम्प्रतं वैदिकशैल्या कर्मोपास्तिसंवित्तरीणामुच्छिन्नतयाऽगाधाचरमसंसारार्णवमुत्तरीतुमशक्नुवतामुद्धरणाय श्रुतिस्मृत्यप्रतिकूलभूयआयाससाध्यप्रचुरवस्वनपेक्षपौराणिकवर्त्मैव परमश्रेयस्करमिति।

तद्विविच्यैव शास्त्रपञ्चकाचार्येत्यणीमेपदोपाधिविलसितेन साहित्यरत्नेन वाराणसेयश्रीहरिहरसंस्कृतपाठशालाप्रधानाध्यापकेन श्रीकृष्णमणित्रिपाठिनाऽष्टादशपुराणपरिचयाभिध एष निबन्धो न्यबन्धि। अत्र पुराणानामपौरुषेयश्रुतिसमत्वोपपत्तयः, पुराणप्रतिपादितप्रमेयाणां प्रमितये प्रमाणानि, ईषदायाससाध्याः सार्वजनीनपथाश्च समासतो निखिलपुराणगताः कर्मोपास्तिज्ञानप्रकाराः पृथक् पृथक् निरूपिताः। अत्रत्याः विषयाः निर्विचिकित्समखिलजिज्ञासुजनोपकारिणो भूयसा श्रमेण संगृह्य निक्षिप्ताः

सन्ति । सम्भावयेऽनभिज्ञानामप्यनेनेष्टं सम्पत्स्यत इति । यद्यप्यत्र मानवप्राकृतिकत्रुट्या मुद्रकसंशोधकानवधानतया च कतिचनाशुद्धयो दृश्यन्स्येनं तथाप्यस्योपकारित्वं तेन दोषेण न विहन्यत इति सम्मनुते--

**सभापतिशर्मोपाध्यायः**

## काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयाध्यक्षाः, कवितार्किक-चक्रवर्तिनः-पं० श्रीमहादेवशास्त्रि महोदयाः—

न ह्यविदितं केषां चिदपि 'जगदिदानीं यदभिमुखं दृश्यते'। तथा चागामिष्यन्त्या विभीषिकाया रक्षितुमात्मानमलं चेत्किञ्चित्तर्हि भारतीया संस्कृतिरेव । सा च वेदप्राणा । वेदानां च सम्यगवगतये यावन्ति सन्ति साधनानि, तेषां मूर्धन्यता पुराणानाम् । तेषु हि वेदोक्तसूक्ष्मतत्त्वानां सविस्तरं समस्ति व्याख्यानम् , वर्तते च काप्यावश्यकता तत्र प्रवेशाय सुकरद्वारस्य । विरमन्ति यस्माद् जिज्ञासमाना अपि पुराणवाङ्मस्य पुष्कलं कलेवरं समीक्ष्य । किंच सुकरद्वाराभावेऽविज्ञाततदीयरहस्यानां जनानां तत्र प्रवृत्तिरपि न प्रादुर्भवति । तादृशं च द्वारं तावत्सारतः समासतश्च व्याख्यानजननी काचनकृतिरेव भवितुमर्हति । पूरयति चेयं प्रस्तुता कृतिः प्रकृतां समस्यामिति तदर्थं भूयो भूयः साधुवादार्हाः श्रीमन्तो लेखकालंकाराः श्रीकृष्णमणित्रिपाठिनः ।

प्रस्तुतायां कृतौ न तावत् पुराणानां तत्त्वतः संक्षेपतश्च परिचितिरेवन्यबन्धि, प्रत्युत तद्गतानां विषयाणां निगूढानामपि विवेचनं सुन्दरं समुपास्थापि । विवेचने च पारम्परीतः समागतानां साम्प्रतिकानां च समुत्थितपुराणानुबन्धिप्रश्नानां समाधानमस्ति विहितम् । तद्यथा पुराणानां वेदमूलकत्वं, प्राचीनत्वं, परस्परं समुदयतां विरोधानां परिहारः, एवमादयो विभिन्ना अपि प्रश्ना विषयाश्च समघट्यन्त । पुराणसाहिती कियद्गभीरा कियच्च सारिष्ठेति सर्वं प्रतिपद्यन्ते मन्दधियोऽपि । अस्याः सरला तु सरणिर्द्वारमुद्घाट्यापि मुद्रयति । अपि च विद्वद्रत्नैः परिचय-

लेखकैराणविकशक्तिविषयिणीमुपस्थाप्य चर्चां गवेषकेभ्योऽपि निमन्त्रणं प्रहितं यत्तैरपि विधीयेत चेदनुसंधानं तर्हि कृत्स्नोऽपि वर्त्तमानो विज्ञानजनितश्चमत्कारो न स्याद् दुष्करोऽवाप्त्यैः।

एवं च प्रक्रान्तायाः कृतेर्महिमानं महान्तं दर्शं दर्शं सुतरां चमत्कृतोऽहमनुरुन्धे मनीषिणोऽन्तेवासिनः, परांश्च सुधाशनसरस्वतीसमुपासकान्, यत्तेविदधीरन्निमान् सोत्साहान्, यतेरंश्चेदमीयसर्वविधाभ्युदयसंवर्धनाय।

महादेवपाण्डेयः

काशीस्थ जो० म० गोयनका संस्कृत महाविद्यालयस्याध्यक्षाः, व्याकरणवेदान्ताचार्याः पं० कमलाकान्तमिश्रमहोदयाः— पुराणाध्यापकाः पण्डितप्रवरा श्रीराममूर्तिशास्त्रिणश्च

'कश्छन्दसां योगमावेद धीरः' इत्याद्युक्तरीत्या अपौरुषेयस्य मन्त्रब्राह्मणात्मकस्य वेदस्य प्रवर्तनाप्रधानस्य तात्पर्यमधिगन्तुमप्रभवतो वेदाध्ययनेऽनधिकारिणश्च सकलसाधारणजनानालोच्य साक्षान्नारायणोद्भवः परमकारुणिकः श्रीकृष्णद्वैपायनो व्यासः अतीते द्वापरान्ते अर्थतात्पर्यत् सुहृत्संमितशब्दप्रधानमष्टादशपुराणं सोपपुराणं निखिलजनहितसाधनसंदृब्धं प्राणिनायेति व्यक्तमेव सर्वेषाम्।

तदपि च अष्टादशभेदभिन्नं प्रत्येकं विपुलविग्रहं परमगभीरमहार्णवमल्पीयसा कालेनाल्पायुषा चावगाढुमशक्यविषयमार्यसंस्कृतेस्तदीयसभ्यतायास्तथाभोगापवर्गयोश्च सुगममार्गप्रदर्शकं कथमिवाञ्जसा तद्वजिगमिषूणां परिज्ञानविषयं स्यादिति भृशं विमृश्य विद्वदास्तिकमणि त्रिपाठिश्रीकृष्णमणिरष्टादशपुराणपरिचयनामकं संक्षिप्तमतिप्रसन्नं सर्वोपकारकं निबन्धं प्रास्तावीत्।

प्रस्तुतेनानेन न केवलं पुराणविषयमात्रं परिज्ञातं भविष्यति किन्तु प्रेक्षावत्प्रवृत्तिप्रयोजकस्य समस्तपुराणानुबन्धजातस्य दर्पणकल्पे इह प्रतिफलितस्य ज्ञानं भवितुमर्हति।

अत्र पुराणमहत्वं तेषां वेदमूलकत्वं भक्त्यवतारवादादयोऽनेके

विवादविषयाः सप्रमाणं सयुक्तिकञ्च निरूपिताः । ते चात्मनो हिन्दुत्वाभिमानिभिः सर्वजातीयैर्द्विजातिभिस्तदितरैश्च नितरां ज्ञातव्याः, येषां ज्ञानमन्तरा स्वकीयं हिन्दुत्वमपि समर्थयितुं न शक्यन्ति । सर्वथोपादित्सितस्यास्य यदि क्वचित् परीक्षापाठ्यपद्धतौ विनियोगो भूयात् तदैवास्य निवन्धरत्नस्य तत्संकलयितुः श्रमस्य च साफल्यं छात्राणां निबन्धविन्यासे नास्तिकमुखमुद्रणे च पाटवं समुपलब्धं स्यात् ।

इदानीं विद्यार्थिव्रजे परमास्तिकभावनाधानस्य महती अपेक्षा अस्ति, यतस्तद् भावनयैव भारतस्य मनूक्तं सकलदेशगुरुत्वं सुव्यवस्थापयितुं शक्यते नान्यथा । पुराणेतिहासशास्त्रमधिजिगांसमानानां कृते तु निबन्धरत्नमिदं ग्रैवेयाभरणमेवेति नातिशयोक्तिः । गुणग्राहिभिरधिकारिभिरस्मै निवन्धमणये समुचितं स्थानं देयं येनास्य शोभा प्रणेतुश्चोत्साहः परां वृद्धिं समश्नुवीयातम् इति संमनुते ।

कमलाकान्तमिश्रः

अनेकशास्त्राचार्यैः लेखनकलाकुशलैः पण्डितप्रवरैः सहृदयहृदयैः पं०श्रीकृष्णमणित्रिपाठिमहानुभावै विरचितमभिनवअष्टादशपुराणपरिचयं पर्यालोच्य प्रसीदतितमां मे मानसम् । अस्य वाग्गुम्फनं सरलपदविन्यासमूलकं विषयप्रतिपादनसरणिश्च साधारणजनोपकारिण्यपि विद्वन्मनोहारिणी जिज्ञासुजनशङ्कापनोदनक्षमा च वर्तते । अत्र च सर्वसाधारणया गीर्वाणवाण्या संक्षेपतो विवेचिताः पौराणिका विषयाः कस्य सचेतसो विदुषो हृदयं नाक्रष्टुमर्हन्ति । कठिनानामपि विषयाणां सरलया संस्कृतभाषया निरूपणं निरीक्ष्य मणिमहोदयस्य पुराणविषयकं प्रचुरं पाण्डित्यं प्रतीयते । पुराणेषु यत्र तत्र प्रक्षिप्तान् विषयान् एकत्रीकर्तुं ग्रन्थकर्तृभिः महान् प्रयासः कृतोऽस्तीति ते सन्ति बहुशो धन्यवादार्हाः । आशासे सुरभारतीसेवकाः संस्कृतानुरागिणश्च सहृदयाः सर्वोपयोगिनोऽस्य ग्रन्थस्यावश्यं स्वागतं करिष्यन्ति । अहमस्य पुस्तकस्य सुमनसा प्रतिसरस्वतीसदनं प्रचारं कामये ।

**राममूर्तिशास्त्री पौराणिकः**

# आभारप्रदर्शनम्

पुराणानि विश्वकल्याणकारिण्या भारतीयसंस्कृतेर्मूलस्रोतसां वेदानां भाष्यभूतानि सन्तीति भारतीयसंस्कृतेः परिशीलनार्थं पुराणानां पारायणं परमावश्यकं विद्यते। पुराणानामतिविपुलकलेवरतया तेषां पारायणं सर्व-सुकरं नास्तीति निभाल्य सुहृद्भिः समुत्साहितेन मया अत्यावश्यकान् कियतः पुराणस्थान् विषयान् अत्यल्पकलेवरेऽस्मिन् "अष्टादशपुराण-परिचय" नामके ग्रन्थेऽतिसरलया संस्कृतभाषया उपस्थापयितुं प्रयासो-विहितः। येनाल्पेनायासेनाल्पीयस्येव समयेऽल्पज्ञानवतामपि पुंसां पुराण-स्थविषयाणां परिचयः स्यात्, पुराणपीयूषपानप्रसक्तमानसानां मनीषिणां मार्गश्च प्रशस्तो भवेत्। यदि मामकीनेनानेनाल्पप्रयासेन पुराणतत्त्वजिज्ञा-सूनां विदुषां कियानपि लाभोऽभविष्यत्तदाहमात्मानं धन्यतममसंस्यम्।

येषां दिगन्तविख्यातकीर्तीनां कृतिनां कृतिभिरयं ग्रन्थोऽलङ्कृतः, ये चोदारहृदया माननीया महन्तो विद्वांसः स्वांस्वामनुपमां सम्मतिं प्रदाय ग्रन्थस्यास्य गौरवं सम्वर्ध्य परां प्रतिष्ठां प्रापितवन्त एनं ग्रन्थम्। तेभ्यो महानुभावेभ्योऽनेकशो धन्यवादान वितरन्नहं साम्बस्य सदाशिवस्य पादपद्मे तेषां दीर्घायुष्ट्वं निकामं कामये।

गौतमवंशावतंसानां नेपालराज्यविभूतीनां गोवेदब्राह्मणादिप्रतिपाल-कनां संस्कृतसाहित्यसंरक्षणबद्धपरिकराणां वैदिकसनातनधर्मपालनतत्प-राणां श्रीमतां पं० हरिहरप्रसादशर्ममहोदयानामपरिमेयां कृतज्ञतां प्रकाश-यामि, येषामौदार्येणेमं ग्रन्थं प्रकाशयितुमिदानीं मया प्रसंगः प्राप्तः। यदि ते तथा नाकरिष्यन् तर्हि ग्रन्थममुं संस्कृतसाहित्यसेवकेभ्यः उपानीकर्तुं नाहमपारयिष्यमिति तभ्यो हार्दिकान् धन्यवादान् प्रदाय मौनमालम्ब्यते।

काशीस्थ श्रीहरिहरसंस्कृतपाठशालाध्यक्षाः सौम्यमूर्तयो वेदाचार्याः पं० दामोदरभटराई महोदया अभिनन्दनशतैः संयोजनीयाः सन्ति। येषां कृपया सौजन्येन च मया पुस्तकममुं प्रकाशयितुं साधीयानवसरो लब्धः।

आगरानगरनिवासिनां विद्याधर्म प्रवर्धिनी संस्कृत पाठशालाध्यक्षाणां

श्रीमतां रायबहादुर पं० श्रीव्रजनाथशर्मगोस्वामिमहोदयनां भूयो भूयः उपकारस्मरणं क्रियते । यत उत्साहशक्तिसम्पन्नाः परमोदारा इमे महानुभावाः, समये समये समीचीनाभिः सूचनाभिः मां सततं प्रोत्साहितवन्तः, यत्परिणामस्वरूपं पुस्तकमिदं तत्रभवतां भवतां करकमलयोः समुपस्थितमिति ते सन्ति बहुशः धन्यावादार्हाः ।

वटपत्तनस्थ-राजकीय-संस्कृत-महाविद्यालयीयोत्तम-कक्षाध्यापकान् अस्माकं परमसुहृदः सरस्वतीसौरभसम्पादकान् व्याकरणाद्यनेकाचार्यान् पं० कालिकाप्रसादशुक्लमहोदयान् अनेकैः साधुवादैरेवसरऽस्मिन् संस्मरामि । ये च निजेन नैसर्गिकेणौदार्येण प्रकाशनार्थं सर्वविधं सौविध्यं सहर्षं समर्प्य सहजं सौजन्यं प्रदर्शितवन्तो ग्रन्थस्यास्य सम्यक् सम्पादने भूयांसश्चपन्थानो निर्दिष्टाः । अत एषांमहानुभावानामुपकारस्मरणे शब्ददारिद्र्यमनुभवन् मौनावलम्बनमेवात्मनः श्रेयः पश्यामि ।

अन्ते वाराणसेय भारतीय साहित्य ग्रन्थमालायाः प्रकाशनव्यवस्थापक महोदयस्य कृतज्ञतामाविष्कुर्वन् नितरामानन्दमनुभवामि । यस्य सुरभारती सेवासंलग्नमनस्कतया सुरभारतीसमुपासकानां सेवायामिममष्टादशपुराणपरिचयं समर्पयितुमीशोऽस्मि सञ्जातः ।

ग्रन्थस्यास्य सम्पादने मानवसुलभां भ्रमप्रमादादिदोषजन्यां मुद्रणादिसमुद्भवाञ्च त्रुटिं करुणावरुणालया गुणग्रहणैकपक्षपातिनो विमलाशयाः विद्वांसो विस्मृत्य मामवश्यमनुग्रहीष्यन्तीतिभूयोभूयः साञ्जलिरहं विनिवेद्य अखिललोकनियामकस्य भूतभावनस्य भगवतो भवानीपतेः चरणकमलयोः सुमनसा सादरं समभ्यर्च्य विरमामि—

वशंवदः

**श्रीकृष्णमणित्रिपाठी**

व्यवस्थापक—
भारतीय साहित्य विद्यालय
१४/२६ टेढीनीम
वाराणसी ।

विजयादशमी
सं० २०१४

*श्रीमतां भारतीयसंस्कृतिसंस्कृतान्तः करणानां समस्तविपश्चिन्मण्डलीजेगीय-
मानयशसां भारतभूनन्दनप्रमुखाणां नीतिनिष्णातानां सौम्यमूर्तीनां
शासनकलाकुशलानां विद्वद्वरेण्यानां विश्वविख्यात वाराणसेय
राजकीयसंस्कृतमहाविद्यालयप्रधानाचार्याणां*
**श्रीकुबेरनाथशुक्लमहोदयानां**

# शुभाशंसनम्

पण्डितप्रवर श्रीकृष्णमणित्रिपाठिविरचितोऽष्टादशपुराणपरिचयाभिधोऽभिनवो ग्रन्थो मया सम्यगवलोकितः। कृशकलेवरोऽप्ययं ग्रन्थः पुराणाध्ययनप्रवृत्तौ भृशमुपकरोति। अत्रादावन्ते च पुराणान्युपजीव्यानेक उपयोगिनो विषया गीर्वाणवाण्या प्रमाणपुरस्सरं सम्यगालोचिताः। मध्ये च मत्स्यनारदपुराणानुसारिणी अष्टादशपुराणानां प्रामाणिकी पद्यमयी विषयानुक्रमणिका प्रस्तुता या पुराणतत्त्वगवेषकाणां विदुषां विद्यार्थिनाञ्च महते प्रमोदाय चकास्ति। सोऽयं निबन्धोपक्रमः पाठकानां पुराणानुशीलनप्रवृत्तिमुत्पादयन् प्रवर्द्धयन् सर्वेषां सुरभारतीसेवाभिरुचिम् अपनुदंश्च पुराणरत्नान्वेषणपरायणानां पुराणवाङ्मयाब्धिमन्थनजन्यक्लेशराशिं सरलभाषया समासेन साधु पौराणिकं रहस्यमुद्घाटयतीत्येतदर्थं श्रीकृष्णमणिशास्त्रिणो भृशं धन्यवादार्हा इति दृढं सम्मनुते—

**कुबेरनाथशुक्लः**

*एम. ए. व्याकरणाचार्यः*

—श्रीकृष्णमणित्रिपाठी

# विषय-सूची

# शुद्धि-पत्रम्

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ६ | त | तं |
| २ | २ | निर्भ्रांतं | निर्भ्रान्तं |
| २ | ६ | तच्छिष्यानां | तच्छिष्याणां |
| २ | २४ | प्राचाण्य | प्रचाण्य |
| ३ | १० | परिपोषकाः | परिपोषकाणि |
| ४ | १० | पौराणिकानां | पौराणिकीनां |
| ५ | १ | चैएकस्य | चैकस्य |
| ६ | १३ | आध्यात्मिकानां | अध्यात्मिकीनां |
| ७ | १७ | वात्स्यानेन | वात्स्यायनेन |
| ६ | १० | परोपकारो | परोपकारः |
| ६ | १३ | अपं | अयं |
| ६ | २० | सीतां | सीताम् |
| १२ | ५ | कर्तृणां | कर्तॄणां |
| १२ | ५ | साहायर्यं | साहाय्यं |
| १२ | ६ | रेक्यमस्ति | रैक्यमस्ति |
| १२ | २१ | प्रमेमयी० | प्रेममय० |
| १३ | १ | गृहीता | ग्रहीता |
| १३ | ६ | कुण्डलात्विषा | कुण्डलत्विषा |
| १७ | २० | परमाणषु | परमाणुषु |
| १७ | २६ | प्रत्येकस्मै | एकैकस्मै |
| १८ | ११ | समितिः | समित्या |
| २२ | ८ | वद्वयं ब्रचतुष्टयम् | ब्रत्रयं वचतुष्टयम् |
| २४ | १५ | मृत्युश्चन्द्राय | मृत्युश्चेन्द्राय |
| २४ | १६ | इन्द्रश्च | इन्द्रश्च |
| २६ | १३ | सात्ववती | सात्यवती |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६ | २५ | श्रद्घाति | श्रद्दधाति |
| ४२ | २१ | श्रीकृष्णोनो | श्रीकृष्णेनो |
| ४३ | १८ | अध्यायषु | अध्यायेषु |
| ४५ | २४ | नारदीवस्य | नारदीयस्य |
| ४७ | २० | द्विजवर्षाय | द्विजवर्याय |
| ४७ | २३ | लभेद्वांच्छितम् | लभेद्वाञ्छितम् |
| ४८ | ३ | (१५००००) | (१५०००) |
| ४८ | १० | अर्थातः | अथातः |
| ४८ | २३ | विधिःज्ञयः | विधिःयज्ञः |
| ४६ | २ | जम्वादि० | जम्ब्वादि० |
| ४६ | ३ | ऊध्वा | ऊर्ध्वा |
| ५० | ७८ | पवम् | पर्व |
| ५२ | ७ | गन्धाद्य | गन्धाद्यैः |
| ५३ | १८ | नारदवघसौ | नारदवेवसोः |
| ५४ | ११ | वश्चाज् | पश्चाज् |
| ५५ | ७ | लोकवाप्नोति | लोकमवाप्नोति |
| ५५ | १४ | लङ्ग० | लिङ्ग० |
| ५७ | १६ | प्रासादात् | प्रसादात् |
| ५८ | १४ | सस्रके | सहस्रके |
| ६१ | १ | स्यात्र | स्तत्र |
| ६१ | २ | सर्व्ववि० | सर्वावि० |
| ६१ | १४ | पार्वत्या | पार्वत्याः |
| ६६ | ७ | द्वादशाचरेः | द्वादशाचरैः |
| ७३ | १२ | सन्नेश्राः | सन्नेश्वराः |
| ७३ | २० | चाषु | चासु |
| ७७ | २४ | द्विजः | द्विज ! |
| ८० | १५ | समृद्धृत्य | समुद्धृत्य |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९१ | १४ | वह्मोवाच | ब्रह्मोवाच |
| ८६ | १३ | क्षोरोद० | क्षीरोद० |
| ९१ | २१ | अग्निां | अग्नीनां |
| ९३ | ३१ | दश | दशधा |
| ९४ | १२ | श्रौतव्यानि | श्रोतव्यानि |
| १०० | १३ | प्रतिसंचर | प्रतिसञ्चरः |
| १०५ | २२ | आसुरीसृष्टेः | आसुरसृष्टेः |
| १०५ | २३ | दैवीसृष्टेः | दैवसृष्टेः |
| १०६ | १६ | नैच्छत् | नैच्छन् |
| १०७ | २२ | पुलस्त्य | पुलस्त्यं |
| १०८ | १३ | धारणः | धारिणः |
| १०८ | २१ | गता | गताः |
| १०८ | २५ | भयति | भवति |
| ११० | १४ | महत्व० | महत्व० |
| १११ | ४ | कलस्य | कालस्य |
| १११ | ११ | सन्दिहन्ते | सन्दिहते |
| १११ | १६ | उपत्पन्नाः | उत्पन्नाः |
| १११ | २५ | पूर्वजैः | पूर्वजाः |
| ११२ | ३ | समयज्ञानय | समयज्ञानाय |
| ११५ | १६ | नान्नो | नाम्नो |
| १२० | ११ | आदर्शं च | आदर्शश्च |
| १२० | १२ | समुज्वलमुपदेशः | समुज्वलउपदेशः |
| १२४ | ४ | कालेनोपपद्रिताः | कालेनोपद्रुताः |
| १२८ | ६ | शक्नाति | शक्नोति |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२८ | १८ | वस्तुतोः | वस्तुतः |
| १२८ | १८ | धर्मीणां | धर्मिणां |
| १२८ | १८ | संगतं च | संगतश्च |
| १२९ | १६ | लभेयं | लभेय |
| १३१ | ८ | चोपस्थाय | चोपस्थाप्य |
| १३३ | १ | पीश्वरास्य | पीश्वरस्य |
| १३४ | १६ | तनुर्धत्ते | तनूर्धत्ते |
| १३६ | १८ | द्वावतारौ | द्वाववतारौ |
| १३६ | २५ | तया | तयो |
| १३७ | २६ | कलाया | कलायाः |
| १३८ | १० | विष्णुरासनम् | विष्णुरास |
| १४२ | २३ | भक्तेः | वृक्षस्य |
| १४४ | १३ | साहाय्यं | साहाय्यं |
| १४४ | १५ | मानुषः | मानुषम् |
| १४४ | १६ | वर्षयकस्य | वर्षवयस्कस्य |
| १४५ | २० | मुक्ति | मुक्तिं |
| १४६ | १५ | षादौ | पादौ |
| १४७ | १ | यस्यम् | यस्याम् |
| १४८ | १७ | स्वल्पमात्रः | स्वल्पमात्राः |
| १५१ | १४ | मामैवेष्य० | मामेवैष्य० |
| १५२ | १ | कृष्णापदा० | कृष्णपद० |
| १५२ | १२ | भगत्पादाब्ज | भगवत्पादाब्ज |
| १५७ | ४ | उर्ध्वलोकेषु | ऊर्ध्वलोकेषु |
| १५७ | ७ | रामकृष्सादिकं | रामकृष्णादि |
| १५८ | ३ | अनुसूया | अनसूया |
| १६० | ३ | पुरणानि | पुराणानि |



# अष्टादशपुराणपरिचयः

—(०:❀:०)—

## मंगलाचरणम्

यस्मात् सर्वविदश्चराचरमिदं मायाजगज्जायते
यस्मिंस्तिष्ठति याति चान्तसमये कल्पानुकल्पे पुनः ।
यं ध्यात्वा मुनयः प्रसन्नमनसा मोक्षं लभन्ते ध्रुवं
तं वन्दे पुरुषोत्तमं सुमनसं लोकोत्तरानन्ददम् ॥१॥

यो देवैर्मुनिसिद्धचारणगणैः सर्वैः सदा स्तूयते
यो विश्वस्य हि सृष्टिपालनलयानामादिहेतुर्विभुः ।
यः संसारमहार्णवे निपतितस्योद्धारको वत्सलः,
तं सर्वेशमनीशमीशमनिशं भक्त्या नमामीश्वरम् ॥२॥

श्रीमद्रामयशस्त्रिपाठिचरणाम्भोजं स्मरन् सादरम्
वेदव्यासमहर्षिमार्यममलं मूर्ध्ना नमन् साञ्जलिः ।
श्रीकृष्णस्तनुते शुभं परिचयश्चाष्टादशानां पुरा—
णानामन्तमणिस्त्रिपाठिपदभाग् गीर्वाणवाण्याश्रयः ॥३॥



## पुराणानां वेदमूलकत्वम्

मनुष्यो महानपि बुद्धिमान् कथं न स्यात्, किन्तु तस्मिन् भ्रमप्रमादादीनां सम्भावना भवत्येव। अत एव मानवरचितं ग्रन्थमधीत्य निर्भ्रांतं पूर्णं च ज्ञानं भवितुं नार्हति। वेदा न केनापि मनुष्येण रचिता नापीश्वरेण निर्मिताः सन्ति; किन्तु परमेश्वरनिश्वासवन्नित्या अनादयोऽनन्ता अपौरुषेयाश्च सन्ति। प्रलये परमेश्वरेऽन्तर्हिताः ते सृष्टिसमये ईश्वरस्य निश्वासरूपेण निःसरन्ति। सर्वप्रथमं ब्रह्मा वेदानां ज्ञानं प्राप्नोति। ततोयः ऋषिः यादृशीं तपस्यां कुरुते, तस्य समक्षे तदनुरूप एव वेदस्यांशः प्रादुर्भवति। ततः स ऋषिः स्वं शिष्यं वेदं शिक्षयति, सोऽपि स्वं शिष्यं शिक्षयतीत्येवं शिष्यप्रशिष्यतच्छिष्यानामविच्छिन्नया गुरुशिष्यपरम्परया अद्यत्वेऽपि वेदानां प्रचारो भवति।

वेदा न केनापि पुरुषेण निर्मिताः सन्ति अत अपौरुषेयाः उच्यन्ते। अतएव अत्र न भ्रमप्रमादादीनां दोषाणां कापि सम्भावना विद्यते। वेदा एव सर्वश्रेष्ठानि निर्भ्रान्तज्ञानसाधनानि सन्ति।

पुरा द्विजबालकाः उपनयनसंस्कारानन्तरं ब्रह्मचर्यपूर्वकं चिरकालं गुरुगृहे उषित्वा वेदान् अभ्यसन्ति स्म। ततो वेदार्थमवगन्तुं शिक्षा-कल्प-व्याकरण-निरुक्त-ज्योतिषच्छन्दसां षण्णां शास्त्राणामध्ययनं कुर्वन्तिस्म। एवं महता परिश्रमेण वेदानां वास्तविकः अर्थोऽवगम्यतेस्म। तथा च निष्कामभावनापूर्वकं वैदिकानां कर्मणामनुष्ठानेन यदा अन्तःकरणं निर्मलं भवति, तदैव निर्मले मनसि वास्तविकं ब्रह्मज्ञानं सम्भवति। एतदभिप्रेत्यैवोक्तम्—"ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च।"

व्यासवाल्मीकिप्रभृतयो महर्षयः अलौकिकीं तपस्यां कृत्वा परमात्मनोऽनुकम्पया वेदानां यथार्थमर्थं ज्ञात्वा तत्प्रचारायावश्यकतामनुभूतवन्तः। साधारणा जना अधिकसमयपर्यन्तं गुरुगृहे स्थातुं न शक्नुवन्ति, नापि वेदार्थमवगन्तुं सब्रह्मचर्यं तादृशं कठिनं परिश्रमं कर्तुं प्रभ-

वन्ति। अतः तादृशानां जनानां कृते वेदानां निगूढमर्थमवगन्तुं ते सरसायां सुबोधायां सरलायां सुरुचिपूर्णायाञ्च संस्कृतभाषायां रामायणं महाभारतं पुराणानि च व्यरचयन्। अत एवोक्तं महाभारते—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥

अतः रामायणेन महाभारतेन पुराणैश्च वेदानां यथार्थमर्थमवगन्तुं यत्नो विधेयः। ये च पुराणादीनामध्ययनं विना वेदानामर्थमवगन्तुं चेष्टन्ते तेषां वास्तविकं वेदार्थज्ञानमसम्भवं प्रतिभाति। यतो हि एकस्यैवाखण्डस्य सार्वजनीनस्य धर्मस्य प्रतिपादका एकस्या एवाखिललोककल्याणकारिण्या भारतीयसंस्कृतेश्च परिपोषका वेदा रामायणं महाभारतं पुराणानि च सन्ति। अत एवोक्तं मत्स्यपुराणे—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः॥

यदा भूमण्डलस्य समस्ता जातयो भोजनपानशयनसन्तानोत्पादनातिरिक्तं किमपि न जानन्तिस्म। तस्मिन् घोराऽन्धकार समयेऽपि सभ्यताया ज्योतिःप्रज्वालका आर्याणां वेदा एव सन्ति। देशीया विदेशीयाश्च सर्वे विद्वांस एकेन स्वरेण स्वीकुर्वन्ति यत् ऋग्वेदात्पूर्वं किमपि पुस्तकं विश्वस्य समक्षे नेदानीं यावदुपलब्धं विद्यते। ऋग्वेद एव सर्वप्राचीनं पुस्तकमस्ति। विश्वस्य ज्ञानिनो विज्ञानिनश्चाद्य यावत् यत्किमपि अन्वेषणं कृतवन्तः, तत्सर्वं वेदे सूक्ष्मरूपेण विद्यत एव। तेषामेव वेदार्थानां सुगमतया सविस्तरं ज्ञानाय पुराणानामाविर्भावोऽभवत्। तथाचोक्तम्—

विस्ताराय च वेदानां स्वयं नारायणः प्रभुः।
व्यासरूपेण कृतवान् पुराणानि महीतले॥

गूढतया वर्णितानामर्थानां यावत् सुरुचिपूर्णया शैल्या वर्णनं न क्रियेत, तावत् पुराणानां निर्माणस्य प्रयोजनं पूर्णं न भवितुमर्हेत्

अतएव आख्यानोपाख्यानगाथाकल्पशुद्ध्यादिभिः तेषां विस्तारं कृतवान् भगवान् व्यासदेवः। तदुक्तम् -

आख्यानैश्चाप्युपाख्यानैः गाथाभिः कल्पशुद्धिभिः।
पुराणसंहितां चक्रे पुराणार्थविशारदः॥

वेदविज्ञानस्य मनोरञ्जके आख्याने परिणतीकरणं पुराणानामपूर्वं कौशलं विद्यते। वेदानां वास्तविकं रहस्यमवगन्तुं प्राचीनाख्यानोपाख्यानादिवर्णनव्याजेन विविधानुपदेशान् दातुं विभिन्नानां विषयाणामुत्कटलालसां परिहायान्तःकरणं भगवदुन्मुखं कर्तुं च यासामैतिहासिकघटनानामुल्लेख आवश्यकोऽस्ति, पुराणेषु तासामेव विशेषतः वर्णनं विद्यते। सर्वासां पौराणिकानां कथानां मूलं वेदा एव विद्यन्ते। पुराणेषु यत्किमपि लिखितं वर्तते तत्सर्वं वेदमन्त्राणां विस्तृता व्याख्याऽस्ति। यथा ऋग्वेदे "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् (१।१२।१७)।" इत्यादिना वर्णितवामनावतारकथा वामनादिपुराणेषु विस्तरेण वर्णिता विद्यते। कस्या अपि आख्यायिकायास्सविस्तरं वर्णनं वेदस्योद्देश्यन्नास्ति, किन्तु वेदे कस्मिंश्चिदुद्देशे या कथातिसंक्षेपेण निर्दिष्टाऽस्ति सैव पुराणेषु विस्तृताख्यायिकारूपेण वर्णिता विद्यते। यतो हि साधारणेषु मनुष्येषु कौतुहलपूर्वकं भगवद्भक्त्युत्पादनं पौराणिकानामाख्यायिकानां प्रमुखं लक्ष्यमस्ति। यथा श्रीमद्भागवतादिपुराणेषु जगन्मातुः गिरिराजकुमार्याः भगवत्याः पार्वत्या उमारूपेण जन्मग्रहणकथा दृश्यते। केनोपनिषदि च ब्रह्मविद्याया हैमवत्या उमारूपेण प्राकट्यं वर्णितमस्ति। तद्यथा - "स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्।" यथा वा अथर्ववेदे (का० ८ सू० प्र० ३।४।५) महाराजस्य पृथोः पृथ्वीदोहनं संक्षेपेण वर्णितमस्ति। परं श्रीमद्भागवते तदेव सविस्तरं वर्णितं विद्यते। यतो हि वेदा नोपाख्यानमूलकाः सन्ति, अतःतेषु स्थलविशेषे एवोदाहरणरूपेणोपाख्यानमस्ति; किन्तु पुराणेषूपाख्यानानामेकत्र समावेशो जातोऽस्ति। अतएव पुराणेषूपाख्यानाना-

माधिक्यं विस्तारश्च दृश्यते। वेदाः पुराणानिचैएकस्य सनातनधर्मस्याभिवृद्धये लोककल्याणाय च विभिन्नकाले आविर्भूता महाग्रन्थाः मन्यन्ते। पुराणेषु वेदात् कथमपि भिन्नता नास्ति। यदि भिन्नतास्ति, तर्हि उभयोः वर्णनपद्धतौ एव। तस्माद्वेदार्थानां विवरणाद्वेदपुराणयोरैक्यं निर्वाधं सिध्यति।

## पुराणानां महत्वम्

पुराणानां महत्वं विविधाभिः दृष्टिभिरवगम्यते। धार्मिकदृष्ट्या पुराणानि वेदनिहितस्यैव धर्मस्य भावगम्यया सरलया भाषया विशदं वर्णनं कुर्वन्ति। पुराणानां सामाजिकं महत्वमपि न्यूनं नास्ति। प्राक्तनस्य समाजस्य स्वरूपमस्माभिः पुराणैरेवोपलभ्यते। पौराणिकस्येतिहासस्य पुष्टिस्तु तत्रतत्रोपलब्धैः शिलालेखैः वैदेशिकानां यात्रावर्णनेन चेदानीं प्रचुरमात्रायां बोभूयते। ऐतिहासिक दृष्ट्या च पुराणेषु तीर्थानां विशदं वर्णनं विद्यते, येन तत्तत्स्थानानां विस्तृतस्य भूगोलस्य सम्यग् ज्ञानं भवति। स्कन्दपुराणस्य काशीखण्डे प्रत्येकस्थानानां शिवलिङ्गानां च विस्तृतं वर्णनं विद्यते। यत्सहयोगेन काश्याः प्रसिद्धानां भूभागानां समीचीनतया ज्ञानं भवितुमर्हति। श्रूयते–विदेशीयाः विद्वांसः पुराणानां साहाय्येनैव नीलनद्या अन्वेषणं कृतवन्तः।

पुराणानां प्रमुखं प्रयोजनं वेदविहितानां तत्वानां जनसाधारणेषु प्रचारो विद्यते। एतत्सिद्धये तैः सरला सुगमा संस्कृतभाषाऽवलम्बिता। केवलं भारतवर्षे एव नहि, किन्तु भारताद्बहिर्विविधेषु देशेषु पुराणैःवैदिकविचारधारायाः प्रवाहविस्तारस्य सुयशोलब्धम्। पुराणानां कृपया सर्वसाधारणाः मनुष्याः स्वजीवनं संयमशीलं विधाय कल्याणमार्गप्रवृत्तेरधिकारं प्राप्तवन्तः। वैदिकधर्मस्य लोकप्रियत्वनिर्माणश्रेयः पुराणैरेव प्राप्तमस्ति। पुराणानि समस्तानां विद्यानामक्षयाः कोषाः सन्ति। अतः विवि-

धानां दरिद्रतानां लक्ष्यीभूतमपीदं भारतवर्षमद्यत्वेऽपि पुराणानां प्रभावेण धनवानिव स्वकीयं शिरो विश्वसमक्षे समुन्नतं कर्तुम् शक्नोति।

पुराणानि गौरवदृष्ट्या अतएव दृश्यन्ते, यदत्र वेदानां शिक्षायाः पुष्टिः कृताऽस्ति, दृष्टान्तद्वारा च वेदार्थानामेव विशदीकरणं विद्यते। विश्वस्मिन् कस्या अपि सभ्यजातेः पार्श्वे पुराणसदृशः सर्वाङ्गपूर्णो न कोऽपि ग्रन्थो विद्यते। पुराणेषु वेदार्थानां स्पष्टीकरणेन सह कथा-वैचित्र्यद्वारा गूढाद्गूढतमस्यापि तत्वस्य साधारणजनानां हृदयङ्गम-सम्पादनवैशिष्ट्यमस्ति।

वर्तमानयुगे धर्मरक्षायाः, वर्णाश्रमव्यवस्थाप्रचारस्य, भारतीयायाः संस्कृतेरुद्भवस्य, भक्तेर्विकासस्य च यद्दर्शनं वोभवीति, तस्य श्रेयः पुराणा-नामेवास्ति। पुराणैरेव भारतीयादर्शजीवनस्य, भारतीयायाः सभ्यतायाः संस्कृतेः, विद्यायाः वैभवस्य, भारतीयानां ज्ञानगरिम्णः, उत्कर्षस्य च वास्तविकं ज्ञानं भवति। प्राचीनकाले भारतीया आधिभौतिकाधिदैविकाध्यात्मिकाना-मुन्नतीनां चरमं सीमानमुपगता आसन्, एतस्य संकेतः पुराणद्वारा एवा-नुभूयते। अत एतन्निःसंशयं वक्तुं शक्यते यत् पुराणानि बद्धानां मुमुक्षूणां जीवन्मुक्तानां च मनुष्याणां सन्मार्गप्रदर्शकानि सन्ति।

वेदे सूक्ष्मरूपेण यन्निर्दिष्टमस्ति तस्यैव विस्तृता व्याख्या व्यास-देवेन भाष्यरूपेण महाभारते पुराणेषु च कृताऽस्ति। अतः स्वयं तेनैव महाभारते संकेतः कृतोऽस्ति यत् "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।" अद्यत्वे यद्यपि वेदानां सर्वाः शाखा नोपलभ्यन्ते तथापि दिव्यज्ञान-सम्पन्नः त्रिकालदर्शी महर्षिर्वेदव्यासः तासां मूलविषयं पुराणेषु यत्र तत्राङ्कितवानस्ति; येनाद्यापि बहूनां वेदशाखानामनुपलब्धावपि तासां प्रतिपाद्यविषयाणामवगाहनं क्रियते एव। वेदे पुराणस्याप्युल्लेखो विद्यते, तथा पुराणं पंचमो वेदो मन्यते। यथा—"एवं वा ह्यरे अस्य महतो भूतस्य निश्वसितं ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः।" यथा वा—"सहोवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं साम-

वेदमथर्वाणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदम्।" अतः वेदानां प्रामाण्ये पुराणानामपि प्रामाण्यं स्वीकृतमेव भवति। यथा ब्रह्मणः सकाशात् तपसा पवित्रान्तःकरणानां महर्षीणां निर्मले हृदये वेदानामाविर्भावो जातः, तथैव ईश्वरानुग्रहेण तेषामेव महर्षीणां मनसि पुराणानामपि प्रादुर्भावोऽजायत।

संस्कृतसाहित्ये पुराणानां स्थानं महदुन्नतमस्ति। यतो वेदानन्तरं सर्वमान्यानि सर्वप्राचीनानि च पुराणान्येव सन्ति। सृष्ट्यादौ "यो ब्रह्माणं विदधाति पूर्वं वेदांश्च तस्मै प्रहिणोति नित्यम्।" इत्यनुसारं प्रथमं ब्रह्माण-मुत्पाद्य परमेश्वरः वेदज्ञानमेव तस्मै उपदिशति। भगवतो वेदज्ञानमुपलभ्य ब्रह्मा अन्यानि शास्त्राणि स्मरति। तत्र सर्वप्रथमं पुराणान्येव स्मरति। तथाचोक्तं पद्मपुराणे सृष्टिखण्डे, मत्स्यपुराणे च—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥

अतो वेदवत्पुराणान्यपि नित्यानि सनातनानि अपौरुषेयाणि सिध्य-न्ति। अतएव भगवत्पूज्यपादैः श्रीशङ्कराचार्यमहोदयैः बृहदारण्यकभाष्ये स्पष्टमुक्तम्—"निश्वसितमिव निश्वसितं यथा अप्रयत्नेनैव पुरुषनिश्वासो भवति एवं पुराणम्" महर्षिणा वात्स्यानेन च स्वकीये न्यायदर्शन-भाष्ये—"य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति विषयव्यवस्थापनाच्च प्रमाणम्। यज्ञो मन्त्रब्राह्मणस्य, लोक-वृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य विषयः।" अलौकिकयोगबलेन समस्तं विश्वं हस्तामलकवत्पश्यद्भिः पूज्यपादैः श्रीपतञ्जलिमुनिभिः स्वकीये पाणिनीयव्याकरणमहाभाष्ये "वाकोवाक्य मितिहासः पुराणम्।" इति वदद्भिः पुराणानां प्रामाण्यं स्पष्टमेव स्वीकृतम्

## पुराणानामध्ययनस्यावश्यकता

वेदेषु येषामाध्यात्मिकाधिदैविकाधिभौतिकबौद्धिकव्यावहारिकनैतिक-सांस्कृतिकदेवमानुषजडचेतनात्मकानां विषयाणां सूक्ष्मरूपेण विधानं विद्यते, ब्राह्मणभागे आरण्यके स्मृतिग्रन्थेषु च येषां प्रतिपादनमस्ति, तेषां सर्वप्रकाराणां पुराणेषु आकर्षकबुद्धिगम्यमनोग्राह्योपदेशप्रदकथानकरूपेण वर्णनं कृतमस्ति। पुराणेषु न केवलमाचारव्यवहारदैनिकक्रियामात्रस्योल्लेखोऽस्ति, किन्तु मानवजीवनोपयोगिनीनां विविधानां भावनानां पूर्णं विवेचनं विद्यते। अतः पुराणानामध्ययनेन वेदार्थनिधीनामुपलब्धिर्भवितुमर्हति। पुराणाध्ययनं विना यथार्थज्ञानं मानवीजिज्ञासायाः पूर्तिश्च न सम्भवति। यद्यपि महर्षिणा व्यासदेवेन ब्रह्मसूत्रे योगभाष्ये च प्रतिपाद्याध्यात्मनिष्ठाद्वारा त्रितापान्मुक्तये सरल उपायः प्रदर्शितोऽस्ति, तथापि ज्ञाननिष्ठायाः पूर्णः परिपाकस्तु पुराणेष्वेव जातोऽस्ति।

पुराणानां कथाभिः सरलतया सर्वं साधनं शीघ्रं बुद्धिगम्यं कर्तुं शक्यते। यथा यजुर्वेदस्य ईशावास्यमन्त्रे मनुष्यतायाः पूर्णविकासस्य साधनं निर्दिष्टमस्ति, किन्तु केवलेन मन्त्रपाठेनार्थज्ञानेनवा सा भावना हृदये न जागर्ति। अतः पुराणप्रतिपादिताभिः महर्षेर्दधीचेः, राज्ञः शिवेः मोरध्वजस्य च कथाभिरुपकारभावना, सत्यवादिनो हरिश्चन्द्रस्य महाराजस्य युधिष्ठिरस्यचोपाख्यानेन सत्यनिष्ठा, दानवीरस्य वलेः कर्णस्यच कथानकेन दाननिष्ठा, वसिष्ठागस्त्यच्यवनादीनां कृत्यैरद्रोहनिष्ठा, अनसूया-सतीसीता-सावित्री-मदालसा-दमयन्ती-नर्मदा-सुकन्या-सुलोचनादीनां सतीनां पवित्राचरणैः पातिव्रत्यधर्मपराणतायाः सञ्चारः नरेषु नारीषु च सहसा भवति। एवं "सत्यं वद धर्मं चर" इत्याद्युपदेशमात्रेण कश्चित्सत्यवादी धर्मात्मा वा भवितुं नार्हति। अतो वेदवाक्यबोधितामितिकर्तव्यतां पुराणेषु कथानकरूपेण मनोग्राह्यां विधातुम् ऐहलौकिकं

पारलौकिकं च जीवनं सफलयितुमादेशो दत्तोऽस्ति। प्रधानतया पुराणानाम्—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चेति पुराणं पञ्च लक्षणम्॥

इति पञ्चलक्षणमादाय मानवजीवनस्य चरमान् लक्ष्यान् अन्तिमानुद्देश्यान् परमपुरुषार्थान् धर्मार्थकाममोक्षांश्च प्राप्तुमैतिहासिककथानामाधारेण प्रभावपूर्णपद्धतौ ज्ञानविज्ञानयोः विस्तारः पुराणेषु प्रदर्शितोऽस्ति। पुराणेषु यावत् सुगमं चतुर्वर्गस्य सिद्धेः साधनमुपलभ्यते न तावदन्यत्र क्वचन प्राप्यते। महर्षिणा व्यासेन अष्टादशपुराणेषु सर्वेषां धर्माणां सारः परोपकारो पुण्यं परपीडनं च महत्पापं निर्दिष्टमस्ति। अयं मानवतायाः कीदृग् महान् मौलिक आदर्शोऽस्ति। तथाचोक्तम्—

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

पुराणेषु दृढनिष्ठाया अन्वेषणे मर्यादापुरुषोत्तमस्य भगवतो रामस्यादर्शचरित्रेण तस्य जीवनस्य वैशिष्ट्येन मर्यादापालनेन च महती हृदयग्राहिणी शिक्षा प्राप्यते। जनमतमादृत्य सः स्वकीयां परमप्रियां सर्वगुणसम्पन्नां सुखदुखसहचारिणीं धर्मपत्नीं साध्वीं सतीं सीतां आसन्नप्रसवामपि परित्यत्याज। पैतृकस्यानुशासनस्यादर्शं स्थापयितुं चक्रवर्तिसाम्राज्यं सहर्षं तत्याज। अत्याचारस्यान्तं कर्तुं दुराचारिणोऽधिनायकवादिनो रावणस्य सकुलोन्मूलनं कृतवान्। यादृशो नैतिकः सामाजिकः चारित्रिकः धार्मिको व्यावहारिकश्चादर्शो रामस्य पवित्रे चरित्रे प्राप्यते, तन्नाखिले भूमण्डले कस्याञ्चिदपि सभ्यतायामुपलभ्यते। रामराज्ये शासनव्यवस्थाया विवरणं महर्षिणा व्यासदेवेन महाभारते एवं प्रदर्शितम्—

"न पुत्रमरणं केचिद्रामे राज्यं प्रशासति।"

वाल्मीकिमुनिनापि रामायणे—

न पुत्रमरणं केचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् ।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥

श्रीरामस्य राज्ये न कश्चिदुपद्रव आसीत् । सात्विकस्यानुशासनस्यायमेवादर्शोऽस्ति । एवं मार्कण्डेयमुनेः जीवनेन दीर्घायुषः, राज्ञो दिलीपस्य पवित्रेण चरित्रेण गोभक्तेरादर्शः पुराणैरेव प्राप्यते । सर्वजीवेषु दयादर्शिनः कस्य देशस्य साहित्ये एवंविधमुदाहरणं दृश्यते यत् चक्रवर्ती सम्राडपि एकस्या गोः रक्षणार्थं स्वकीयं शरीरं मांसपिण्डमिव गोघातिने क्रूराय सिंहाय समर्पयेत् ।

पुराणेषु सर्वेषामास्तिकदर्शनानां सिद्धान्तस्य सूत्ररूपेण निरूपणमस्ति । सांख्ययोगवेदान्तदर्शनानां तु पुराणेषु विशेषतो विवेचनमुपलभ्यते । किञ्च व्याकरणसाहित्यच्छन्दोज्योतिषनिरुक्तशिक्षाकल्पायुर्वेद धनुर्वेदगन्धर्ववेदस्थापत्यवेदराजनीतिसमाजनीतिविविधधर्माङ्गादिषु विषयेष्वपि पुराणेषु पर्याप्तः प्रकाशः प्राप्यते । अतएव पुराणानि भारतीय संस्कृतेः विश्वकोषा उच्यन्ते । लौकिकविषयातिरिक्तं पुराणेषु पारलौकिकविषयाणामपि प्रचुरं विवेचनं कृतमस्ति । आधुनिका वैज्ञानिका बहुना व्यापारेण प्रेतलोकस्य मङ्गललोकस्य च किञ्चिद् ज्ञानं प्राप्तवन्तः; परन्तु अस्मिन् विषये तेषां ज्ञानमिदानीं यावत् अपूर्णमेवास्ति । यतोहि नाधुनापर्यन्तं तेषां ज्ञानं जातमस्ति यदितः परमपि कश्चित्सूक्ष्मः स्तरो विद्यते । पुराणेषूर्ध्वमधश्च स्थितानां चतुर्दशानां लोकानां तत्रत्यनिवासिनां तेषामायुषः, आहारस्य, विहारस्य, तत्र प्रचलितस्य कालमानस्य च निश्चितं वर्णनं वर्तते । येनेदं ज्ञायते यदस्माकं पूर्वजानां महर्षीणां ज्ञानं कियदतिनिर्मलं विस्तृतं बहुज्ञतापूर्णञ्चासीत ।

मानवजन्मनः प्रधानं लक्ष्यं भगवत्प्राप्तिरस्ति; तत्साधनानि च पुराणानि सन्ति । निष्कामकर्मद्वारा त्यागवृत्तिग्रहणपूर्वकं स्वर्गापवर्गयोः मार्गस्य सुलभानि साधनानि पुराणान्येव सन्ति । पुराणानि सर्वसाधन-

योगक्रियासिद्धितन्त्रमन्त्रकल्याणकारिसिद्धान्तैः परिपूर्णानि सन्ति । अत एवसर्वशास्त्रेषु पुराणानां गौरवं गीतमस्ति ।

पुराणेषु ज्ञानस्य कर्मणः भक्तेश्च महत्वपूर्णवर्णनेन सह मानवजीवनस्य यावन्तो दृष्टिकोणाः सन्ति तेषां सर्वेषां वर्णनं वर्तते । पुराणैः आबालवृद्धा नरा नार्यश्च समानं लाभं प्राप्तुं शक्नुवन्ति । पुराणानि भवरोगस्याद्भुतानि औषधानि सन्ति । संसारस्य सर्वासां समस्यानां सरलतया सुगमीकर्तुं साधनैः सम्पन्नानि पुराणानि भगवतो व्यासदेवस्य कृपाया फलानि सन्ति । पुराणानि सांसारिकत्रितापतप्तानां प्राणिनां प्रबोधम्, अज्ञानान्धकारे निपतितानां प्रकाशम्, भ्रान्तानां सन्मार्गम्, निराशानामाशाज्योतिः, शोकसन्तप्तानामुल्लासमयं प्रसादम्, पथभ्रष्टानां कर्तव्यज्ञानम्, पापिनां पापनाशनसाधनम्, नीतिविशारदानां नीतिनैपुण्यं निष्कर्मिणां साधनोपदेशम्, भक्तानां भक्तिभावं ज्ञानिनामलौकिकज्ञानस्य प्रकाशं ददति । तात्पर्यमिदमस्ति यद् ये जिज्ञासवो येनोद्देशेन पुराणेषु सविश्वासं श्रद्दधति भक्तिभावेन च पुराणानां स्वाध्यायं कुर्वन्ति, ते समुद्रादमूल्यं रत्नमिव एभ्य उभयलोककल्याणकारि बहुमूल्यं सदुपदेशं प्राप्य स्वां जीवनं सफलयितुम् समर्थाः भवन्ति ।

पुराणानि त्रिकालेषूपयोगीनि सन्ति । तानि अतीतगौरवगानेन सह वर्तमानकाले सुखशान्तिसञ्चारं सम्पाद्य भविष्यत्कालाय मुक्तिसन्देशं ददति । यतोहि पुराणानि सर्वश्रेणिमनुष्येभ्यः तदधिकारानुसारं कर्म कर्तुं सन्मार्गसाधनस्योपायं प्रदर्शयन्ति । अभ्युदयस्य निःश्रेयसस्य च सिद्धये जीवः कथमग्रेसरो भवितुमर्हतीत्यस्य विषयस्य पुराणेषु विशदं वर्णनं विद्यते । पुराणेषु सृष्टिकालत आरभ्यैकस्याविच्छिन्नक्रमस्य हृदयङ्गमस्याख्यानस्योपलब्धिर्भवति । अतः पुराणानि सर्वतोमुख्या उन्नतेः अभ्युदयनिःश्रेयसयोः साधनस्य चाक्षयो भाण्डागारो वर्तते ।

पुराणेषु ज्ञान-कर्म-वैराग्य-भक्ति-विश्वास-यज्ञ-दान-तपः-यम-नियमसंयम सेवा-दया-दाक्षिण्य-वर्णाश्रमधर्म-पुरुषधर्म-स्त्रीधर्मसदा चारावतारादीनां

